# श्रीब्रह्मसंहिता
## पञ्चमाध्यायः

ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः ।
अनादिरादिर्गोविन्दः सर्वकारणकारणम् ॥१ ॥

सहस्रपत्रकमलं गोकुलाख्यं महत्पदम् ।
तत्कर्णिकारं तद्धाम तदनन्तांशसम्भवम्॥ २ ॥

कर्णिकारं महद्यन्त्रं षट्कोणं वज्रकीलकम्।
षडङ्गषट्पदीस्थानं प्रकृत्या पुरुषेण च ॥ ३ ॥

प्रेमानन्दमहानन्दरसेनावस्थितं हि यत् ।
ज्योतीरूपेण मनुना कामबीजेन सङ्गतम्॥ ४ ।
तत्किञ्जल्कं तदंशानां तत्पत्राणि श्रियामपि ॥ ५ ॥

चतुरस्रं तत्परितः श्वेतद्वीपाख्यमद्भुतम् ।
चतुरस्रं चतुर्मूर्तेश्चतुर्धाम चतुष्कृतम् ॥ ६ ॥

चतुर्भिः पुरुषार्थैश्च चतुर्भिर्हेतुभिर्वृतम् ।
शूलैर्दशभिरानद्धमूर्ध्वाधो दिग्विदिक्ष्वपि ॥ ७ ॥

अष्टभिर्निधिभिर्जुष्टमष्टभिः सिद्धिभिस्तथा ।
मनुरूपैश्च दशभिर्दिक्पालैः परितो वृतम् ॥ ८ ॥

श्यामैर्गौरैश्च रक्तैश्च शुक्लैश्च पार्षदर्षभैः ।
शोभितं शक्तिभिस्ताभिरद्भुताभिः समन्ततः ॥ ९ ॥

एवं ज्योतिर्मयो देवः सदानन्दः परात्परः ।
आत्मारामस्य तस्यास्ति प्रकृत्या न समागमः ॥ १० ॥

माययारममाणस्य न वियोगस्तया सह ।
आत्मना रमया रेमे त्यक्तकालं सिसृक्षया ॥ ११ ॥

नियतिः सा रमा देवि तत्प्रिया तद्वशं तदा ।
तल्लिङ्गं भगवान् शम्भुर्ज्योतिरूपः सनातनः ।

या योनिः सापरा शक्तिः कामो बीजं महद्धरेः ॥ १२ ॥

लिङ्गयोन्यात्मिका जाता इमा माहेश्वरीप्रजाः ॥ १३ ॥

शक्तिमान्पुरुषः सोऽयं लिङ्गरूपी महेश्वरः ।
तस्मिन्नाविरभूल्लिङ्गे महाविष्णुर्जगत्पतिः ॥ १४ ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सहस्रबाहुर्विश्वात्मा सहस्रांशः सहस्रसूः ॥ १५ ॥
नारायणः स भगवानापस्तस्मात्सनातनात् ।
आविरासीत्कारणार्णो निधिः सङ्कर्षणात्मकः ।
योगनिद्रां गतस्तस्मिन् सहस्रांशः स्वयं महान् ॥ १६ ॥
तद्रोमबिलजालेषु बीजं सङ्कर्षणस्य च ।
हैमान्यण्डानि जातानि महाभूतावृतानि तु ॥ १७ ॥
प्रत्यण्डमेवमेकांशादेकांशाद्विशति स्वयम् ॥ १८ ॥
(सहस्रमूर्धा विश्वात्मा महाविष्णुः सनातनः)

वामाङ्गादसृजद्विष्णुं दक्षिणाङ्गात्प्रजापतिम् ।
ज्योतिर्लिङ्गमयं शम्भुं कूर्चदेशादवासृजत् ॥ १९ ॥

अहङ्कारात्मकं विश्वं तस्मादेतद्व्यजायत ॥ २० ॥

अथ तैस्त्रिविधैर्वेशैर्लीलामुद्वहतः किल ।
योगनिद्रा भगवती तस्य श्रीरिव सङ्गता ॥ २१ ॥

सिसृक्षायां ततो नाभेस्तस्य पद्मं विनिर्ययौ ।
तन्नालं हेमनलिनं ब्रह्मणो लोकमद्भुतम् ॥ २२ ॥

तत्त्वानि पूर्वरूढानि कारणानि परस्परम् ।
समवायाप्रयोगाच्च विभिन्नानि पृथक् पृथक् ॥ २३ ॥

चिच्छक्त्या सज्जमानोऽथ भगवानादिपूरुषः ।
योजयन्मायया देवो योगनिद्रामकल्पयत् ॥ २४ ॥

योजयित्वा तु तान्येव प्रविवेश स्वयं गुहाम् ।
गुहां प्रविष्टे तस्मिंस्तु जीवात्मा प्रतिबुध्यते ॥ २५ ॥

स नित्यो नित्यसम्बन्धः प्रकृतिश्च परैव सा ॥ २६ ॥

एवं सर्वात्मसम्बन्धं नाभ्यां पद्मं हरेरभूत् ।
तत्र ब्रह्माभवद्भूयश्चतुर्वेदि चतुर्मुखः ॥ २७ ॥

सञ्जातो भगवच्छक्त्या तत्कालं किल चोदितः ।
सिसृक्षायां मतिं चक्रे पूर्वसंस्कारसंस्कृतः ।
ददर्श केवलं ध्वान्तं नान्यत्किमपि सर्वतः ॥ २८ ॥

उवाच पुरतस्तस्मै तस्य दिव्या सरस्वती ।
कामकृष्णाय गोविन्द ङे गोपीजन इत्यपि ।
वल्लभाय प्रिया वह्नेर्मन्त्रं ते दास्यति प्रियम् ॥ २९ ॥

तपस्त्वं तप एतेन तव सिद्धिर्भविष्यति ॥ ३० ॥

अथ तेपे स सुचिरं प्रीणन् गोविन्दमव्ययम् ।
श्वेतद्वीपपतिं कृष्णं गोलोकस्थं परात्परम् ॥ ३१ ॥

प्रकृत्या गुणरूपिण्या रूपिण्या पर्युपासितम् ।
सहस्रदलसम्पन्ने कोटिकिञ्जल्कबृंहिते ॥ ३२ ॥

भूमिश्चिन्तामणिस्तत्र कर्णिकारे महासने ।
समासीनं चिदानन्दं ज्योतिरूपं सनातनम् ॥ ३३ ॥

शब्दब्रह्ममयं वेणुं वादयन्तं मुखाम्बुजे ।
विलासिनीगणवृतं स्वैः स्वैरंशैरभिष्टुतम् ॥ ३४ ॥

अथ वेणुनिनादस्य त्रयीमूर्तिमयी गतिः ।
स्फुरन्ती प्रविवेशाशु मुखाब्जानि स्वयम्भुवः ॥ ३५ ॥

गायत्रीं गायतस्तस्मादधिगत्य सरोजजः ।
संस्कृतश्चादिगुरुणा द्विजतामगमत्ततः ॥ ३६ ॥

त्रय्या प्रबुद्धोऽथ विधिर्विज्ञाततत्त्वसागरः ।
तुष्टाव वेदसारेण स्तोत्रेणानेन केशवम् ॥ ३७ ॥

चिन्तामणिप्रकरसद्मसु कल्पवृक्ष-
लक्षावृतेषु सुरभिरभिपालयन्तम् ।
लक्ष्मीसहस्रशतसम्भ्रमसेव्यमानं
गोविन्दमादिपुरुषं तमहं भजामि ॥ ३८ ॥

वेणुं क्वणन्तमरविन्ददलायताक्षं
बर्हावतंसमसिताम्बुदसुन्दराङ्गम् ।
कन्दर्पकोटिकमनीयविशेषशोभं
गोविन्दमादिपुरुषं तमहं भजामि ॥ ३९ ॥

आलोलचन्द्रकलसद्वनमाल्यवंशी-
रत्नाङ्गदं प्रणयकेलिकलाविलासम् ।
श्यामं त्रिभङ्गललितं नियतप्रकाशं
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४० ॥

अङ्गानि यस्य सकलेन्द्रियवृत्तिमन्ति
पश्यन्ति पान्ति कलयन्ति चिरं जगन्ति ।
आनन्दचिन्मयसदुज्ज्वलविग्रहस्य
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४१ ॥

अद्वैतमच्युतमनादिमनन्तरूप-
माद्यं पुराणपुरुषं नवयौवनं च ।
वेदेषु दुर्लभमदुर्लभमात्मभक्तौ
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४२ ॥

पन्थास्तु कोटिशतवत्सरसंप्रगम्यो
वायोरथापि मनसो मुनिपुङ्गवानाम् ।
सोऽप्यस्ति यत्प्रपदसीम्न्यविचिन्त्यतत्त्वे
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४३ ॥

एकोऽप्यसौ रचयितुं जगदण्डकोटिं
यच्छक्तिरस्ति जगदण्डचया यदन्तः ।
अण्डान्तरस्थपरमाणुचयान्तरस्थं
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४४ ॥

यद्भावभावितधियो मनुजास्तथैव
सम्प्राप्य रूपमहिमासनयानभूषाः ।
सूक्तैर्यमेव निगमप्रथितैः स्तुवन्ति
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४५ ॥

आनन्दचिन्मयरसप्रतिभाविताभि-
स्ताभिर्य एव निजरूपतया कलाभिः ।
गोलोक एव निवसत्यखिलात्मभूतो
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४६ ॥

प्रेमाञ्जनच्छुरितभक्तिविलोचनेन
सन्तः सदैव हृदयेषु विलोकयन्ति ।
यं श्यामसुन्दरमचिन्त्यगुणस्वरूपं
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४७ ॥

रामादिमूर्तिषु कलानियमेन तिष्ठन्
नानावतारमकरोद्भुवनेषु किन्तु ।
कृष्णः स्वयं समभवत्परमः पुमान्यो
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४८ ॥

यस्य प्रभा प्रभवतो जगदण्डकोटि-
कोटिष्वशेषवसुधादि विभूतिभिन्नम् ।
तद्ब्रह्म निष्कलमनन्तमशेषभूतं
गोविन्दमादिपुरुषं तमहं भजामि ॥ ४९ ॥

माया हि यस्य जगदण्डशतानि सूते
त्रैगुण्यतद्विषयवेदवितायमाना ।
सत्त्वावलम्बिपरसत्त्वं विशुद्धसत्त्वम्
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५०॥

आनन्दचिन्मयरसात्मतया मनःसु
यः प्राणिनां प्रतिफलं स्मरतामुपेत्य ।
लीलायितेन भुवनानि जयत्यजस्रम्
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५१ ॥

गोलोकनाम्नि निजधाम्नि तले च तस्य
देवीमहेशहरिधामसु तेषु तेषु ।
ते ते प्रभावनिचया विहिताश्च येन
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५२ ॥

सृष्टिस्थितिप्रलयसाधनशक्तिरेका
छायेव यस्य भुवनानि बिभर्ति दुर्गा ।
इच्छानुरूपमपि यस्य च चेष्टते सा
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५३ ॥

क्षीराद्यथा दधि विकारविशेषयोगात्
सञ्जायते न हि ततः पृथगस्ति हेतोः ।
यः शम्भुतामपि तथा समुपैति कार्याद्
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५४ ॥

दीपार्चिरेव हि दशान्तरमभ्युपेत्य
दीपायते विवृतहेतुसमानधर्मा ।
यस्तादृगेव हि च विष्णुतया विभाति
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५५ ॥

यः कारणार्णवजले भजति स्म योग-
निद्रामनन्तजगदण्डसरोमकूपः ।
आधारशक्तिमवलम्ब्य परां स्वमूर्तिं
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५६ ॥

यस्यैकनिश्वसितकालमथावलम्ब्य
जीवन्ति लोमविलजा जगदण्डनाथाः ।
विष्णुर्महान्स इह यस्य कलाविशेषो
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५७ ॥

भास्वान्यथाश्मशकलेषु निजेषु तेजः
स्वीयं कियत्प्रकटयत्यपि तद्वदत्र ।
ब्रह्मा य एष जगदण्डविधानकर्ता
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५८ ॥

यत्पादपल्लवयुगं विनिधाय कुम्भ-
द्वन्द्वे प्रणामसमये स गणाधिराजः ।
विघ्नान् विहन्तुमलमस्य जगत्त्रयस्य
गोविन्दमादिपुरुषं तमहं भजामि ॥ ५९ ॥

अग्निर्मही गगनमम्बु मरुद्दिशश्च
कालस्तथात्ममनसीति जगत्त्रयाणि ।
यस्माद्भवन्ति विभवन्ति विशन्ति यं च
गोविन्दमादिपुरुषं तमहं भजामि ॥ ६० ॥

यच्चक्षुरेष सविता सकलग्रहाणां
राजा समस्तसुरमूर्तिरशेषतेजाः ।
यस्याज्ञया भ्रमति सम्भृतकालचक्रो
गोविन्दमादिपुरुषं तमहं भजामि ॥ ६१ ॥

धर्मोऽथ पापनिचयः श्रुतयस्तपांसि
ब्रह्मादिकीटपतगावधयश्च जीवाः ।
यद्दत्तमात्रविभवप्रकटप्रभावा
गोविन्दमादिपुरुषं तमहं भजामि ॥ ६२ ॥

यस्त्विन्द्रगोपमथवेन्द्रमहो स्वकर्म-
बन्धानुरूपफलभाजनमातनोति ।
कर्माणि निर्दहति किन्तु च भक्तिभाजां
गोविन्दमादिपुरुषं तमहं भजामि ॥ ६३ ॥

यं क्रोधकामसहजप्रणयादिभीति-
वात्सल्यमोहगुरुगौरवसेव्यभावैः ।
सञ्चिन्त्य तस्य सदृशीं तनुमापुरेते
गोविन्दमादिपुरुषं तमहं भजामि ॥ ६४ ॥

श्रियः कान्ताः कान्तः परमपुरुषः कल्पतरवो
द्रुमा भूमिश्चिन्तामणिगणमयी तोयममृतम् ।
कथा गानं नाट्यं गमनमपि वंशी प्रियसखी
चिदानन्दं ज्योतिः परमपि तदास्वाद्यमपि च ॥ ६५ ॥

स यत्र क्षीराब्धिः स्रवति सुरभीभ्यश्च सुमहान्
निमेषार्धाख्यो वा व्रजति न हि यत्रापि समयः ।
भजे श्वेतद्वीपं तमहमिह गोलोकमिति यं
विदन्तस्ते सन्तः क्षितिविरलचाराः कतिपये ॥ ६६ ॥

अथोवाच महाविष्णुर्भगवन्तं प्रजापतिम् ।
ब्रह्मन् महत्त्वविज्ञाने प्रजासर्गे च चेन्मतिः ।
पञ्चश्लोकीमिमां विद्यां वत्स दत्तां निबोध मे ॥ ६७ ॥

प्रबुद्धे ज्ञानभक्तिभ्यामात्मन्यानन्दचिन्मयी ।
उदेत्यनुत्तमा भक्तिर्भगवत्प्रेमलक्षणा ॥ ६८ ॥

प्रमाणैस्तत्सदाचारैस्तदभ्यासैर्निरन्तरम् ।
बोधयनात्मनात्मानं भक्तिमप्युत्तमां लभेत् ॥ ६९ ॥

यस्याः श्रेयस्करं नास्ति यया निर्वृतिमाप्नुयात् ।
या साधयति मामेव भक्तिं तामेव साधयेत् ॥ ७० ॥

धर्मानन्यान् परित्यज्य मामेकं भज विश्वसन् ।
यादृशी यादृशी श्रद्धा सिद्धिर्भवति तादृशी ॥ ७१ ॥

कुर्वन्निरन्तरं कर्म लोकोऽयमनुवर्तते ।
तेनैव कर्मणा ध्यायन्मां परां भक्तिमिच्छति ॥ ७२ ॥

अहं हि विश्वस्य चराचरस्य बीजं प्रधानं प्रकृतिः पुमांश्च ।
मयाहितं तेज इदं बिभर्षि विधे विधेहि त्वमथो जगन्ति ॥ ७३ ॥

इति श्रीब्रह्मसंहितायां पञ्चमाध्यायः